# *देवी अपराध क्षमा स्तोत्रम्*

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न च आव्हानं ध्यानं तदपि च न जाने स्तुतिकथाः ।
न जाने मुद्रास्ते तदपि च न जाले विलपनं
परं जाने मातः त्वदनुसरणं क्लेशहरणम् ॥ 1 ॥

विधेरज्ञानेन द्रविण विरहेणा लसतया
विधेयाशक्यत्वात् तव  चरणयोर्याऽच्युतिरभूत् ।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत् क्वचिदपि कुमाता न भवति ॥ 2 ॥

पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितं इदं नो तव शिवे
कुपुत्रो जायेत् क्वचिदपि कुमाता न भवति ॥ 3 ॥

जगन्मातर्मातः तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणं अपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत् प्रकुरुषे
कुपुत्रो जायेत् क्वचिदपि कुमाता न भवति ॥ 4 ॥

परित्यक्ता देवा विविध विध सेवा कुलतया
मया पञ्चा शीतेः अधिकमपनीते तु वयसि ।
इदानीं चेन्मातस्तव यदि कृपा नापि भविता
निरालंबो लंबोदरजननि कं यामि शरणम् ॥ 5 ॥

श्वापको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्को रङ्को विहरति चिरं कोटिकनकैः ।
तवापर्णे कर्णे विशति मनु वर्णे फलमिदं
जनः को जानीते जननि जननीयं जपविधौ ॥ 6 ॥

चिताभस्मालेपो गरलशमनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैक पदवीं
भवानि त्वत् पाणिग्रहण परिपाटी फलं इदम् ॥ 7 ॥

न मोक्षस्य आकांक्षा भवविभव वाञ्छापि च न मे
न विज्ञान अपेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अत त्वां संचाये जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानी इति जपतः ॥ 8 ॥

न आराधितासि विधिना विविध उपचारैः
किं रुक्षचिन्तनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किञ्चन मय्यनाथे
धत्से कृपां उचितं अंब परं तवैव ॥ 9 ॥

आपत्सु मग्नः स्मरणं त्वदीयं
करोमि दुर्गे करुणार्णवेशि ।
नैतत् छठत्वं मम भावयेथाः
क्षुधा तृषार्ता जननीं स्मरन्ति ॥ 10 ॥

जगदंब विचित्रं अत्र किं परिपूर्णा करुणास्ति चेन्मयि ।
अपराध परंपरावृतं न हि माता समुपेक्षते सुतम् ॥ 11 ॥

मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।
एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥ 12 ॥

॥ इति देवी अपराध क्षमा स्तोत्रं संपूर्णम् ॥